# संस्कृत-वार्ताः

दिनाङ्कः - 27-03-2020

प्रात: - 06:55

**मुख्यवार्ताः**

- प्रधानमन्त्री श्री नरेंद्रमोदी ह्यः सायं वैश्विक-नवीकरणीय-ऊर्जा-निवेशकानाम् उपवेशनं अपि च री-इन्वेस्ट् इत्याख्यायाः प्रदर्शन्याः उद्घाटनं विहितवान्।
- राष्ट्रियसुरक्षा-परामर्शकः अजीतडोभालः अद्य चतुर्थे राष्ट्रिय सुरक्षापरामर्शकस्तरीये सम्मेलने भागं ग्रहीतुं कोलोम्बोनगरं प्रस्थास्यति।
- कृषिमन्त्री नरेन्द्रसिंह तोमरः प्रावोचत् यत् सर्वकारः कृषकैः सहवार्ताः कर्तुं सज्जः अस्ति।
- भारतं कोरोना इति वैश्वकसंक्रमणं विरुध्य अनारतं साफल्यम् अधिगच्छति। प्रत्यावाप्तिमितिः षड्-षड् दशमलवोत्तर त्रिनवति प्रतिशतं संवृता।
- सिडनीक्रीडाङ्गणे अद्य भारतम् एकदिवसीय-क्रिकेट श्रृंखलायाः प्रथमस्पर्धायां ऑस्ट्रेलियादलेन सह क्रीडिष्यति।

-----------------------------

**कोविड आपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

<u>प्रधानमन्त्री</u>

प्रधानमन्त्री श्री नरेंद्रमोदी ह्यः सायं वैश्विक नवीकरणीय-ऊर्जा-निवेशकानाम् उपवेशनं अपि च री-इन्वेस्ट् इत्याख्यायाः प्रदर्शन्याः उद्घाटनं विहितवान्। अस्मिन्नवसरे प्रधानमन्त्रिणोक्तं यत् भारतस्य नवीकरणीयोर्जाक्षमता आविश्वे चतुर्थं स्थानं भजते। भारतस्य वर्तमान-क्षमता षड्त्रिंशतदुत्तरैकशतं गीगावॉटमिता अस्ति।

श्रीमोदी न्यगादीत् यत् भारतस्य षड्वर्षात्मिकीयं यात्रा अद्भुता वर्तते। देशः प्रत्येकं जनं यावत् विद्युत्प्रापणस्य कार्यं विदधति येन सर्वे स्वकीय कौशल वृद्धौ कार्यं कुर्युः प्रधानमन्त्रिणा अवादि यत् "व्यवसायकरणसारल्यम्" अस्माकं मुख्यं ध्येयं विद्यते।

<u>एनएसए</u>

राष्ट्रियसुरक्षा परामर्शकः अजीतडोभालः अद्य चतुर्थे राष्ट्रियसुरक्षापरामर्शकस्तरीये सम्मेलने भागं ग्रहीतुं कोलोम्बोनगरं प्रस्थास्यति। द्विदिवसात्मके-अस्मिन् सम्मेलने श्रीलङ्कायाः सुरक्षासचिवः श्रीकमलगुणारत्नेमहोदयः यदि च मालदीवस्य रक्षामन्त्री मारिया-दीदी भागं ग्रहीष्यतः।

**<u>कृषिमन्त्री</u>**

**कृषिमन्त्री नरेन्द्रसिंह तोमरः प्रावोचत् यत् सर्वकारः कृषकैः सहवार्ताः कर्तुं सज्जः अस्ति। वार्ताहरैः सह संवादे श्रीतोमरः अवादीत् यत् कृषिसम्बद्धनियमाः वर्तमान-समयस्य प्रमुखावश्यकतास्ति अपि च एतैः क्रान्तिकारि-परिवर्तनानि भवितारः। तेनोक्तं यत् अस्माभिः कृषकाः संवादाय दिसम्बर मासस्य त्रितारिकायां आहूताः अपेक्षास्ति यत् परिणोपि सकारात्मकः भविता।**

**कोविड-अपडेट**

**भारतं कोरोना इति वैश्वकसंक्रमणं विरुध्य अनारतं साफल्यम् अधिगच्छति। अनवरतं ऊनविंश-दिवसं प्रत्यह्नि पंचाशत् सहस्रतो नैयून्यम् कोरोना प्रकरणानि। विगते अहोरात्रे चतुश्चत्वारिंशत्-सहस्रसंख्याकानि नूतनप्रकरणानि पंजीकृतानि। अपरतः षड्त्रिंश-सहस्रसंख्याकाः जनाः पूर्णरूपेण आरोग्यं प्राप्य सकुशलं गृहम् उपेताः। प्रत्यावाप्तिमितिः षड्-षड् दशमलवोत्तर त्रिनवति प्रतिशतं संवृत्ता।**

**प्रधानमन्त्री-मनकीबात**

**प्रधानमन्त्री नरेन्द्रमोदी आगामि-रविवासरे स्वीये “मन की बात” इति कार्यक्रमे देशवासिभिः साकं विचारविनिमयं करिष्यति।**

“मन की बात” इति मासिक कार्यक्रमस्य इदं एकसप्ततितमं संस्करणं भविता। अस्य कार्यक्रमस्य प्रसारणं आकाशवाण्याः दूरदर्शनस्य च सर्वाभिः वाहिनीभिः प्रसारयिष्यते।

प्रधानमन्त्रिणः अस्मै कार्यक्रमाय देशवासिनः स्वीय-परामर्शं “नमो” इति चरिष्णुतन्त्रमाध्यमेन MyGOV (माई गॉव) इति अन्तर्जालीयपटलद्वारा अथवा एकम् अष्ट शून्यं शून्यं एकम् एकम् सप्त अष्ट शून्यं शून्यं (1800-11-7800) इति मुक्तदूरभाषसंख्यया अपि प्रेषयितुं शक्यन्ते इति।

## इण्डिया-ऑस्ट्रेलिया

सिडनीक्रीडाङ्गणे अद्य भारतम् एकदिवसीय-क्रिकेट श्रृंखलायाः प्रथमस्पर्धायां ऑस्ट्रेलियादलेन सह क्रीडिष्यति। भारतीयदलं अष्टमासानन्तरं अन्ताराष्ट्रिय-क्रिकेट-स्पर्धायां प्रत्यावर्तते। अस्य प्रसारणम् आकाशवाणीतः क्रमशः आङ्ग्ल-हिन्दीभाषयोः भवन्तः सार्धाष्टवादनात् श्रोतुर्महन्ति।